रूपकमञ्जरीग्रन्थमाला-४ अपर्णा-मञ्जु-नीलिमा-स्मृतिग्रन्थः

# उत्तरकुरुक्षेत्रम्

नाम

## नाटकम्

पश्चिमवङ्ग-शिक्षाधिकार-सेवातो विश्रान्तेन प्राध्यापकेन
पश्चिमवङ्ग-संस्कृतशिक्षापरिषदः प्राक्तन-सदस्येन
श्रीविश्वेश्वर विद्याभूषणकाव्यतीर्थेन
विरचितम्

# UTTARAKURUKṢETRAM

[Sanskrit Drama]

*By*

Pt. VIŚVEŚVARA VIDYABHŪṢAṆA KAVYATIRTHA



LCUTTA

1968

# Some valuable works in modern Sanskrit

*for use in Universities, Colleges, Schools, libraries and Cultural Institutions.*

*By*—**Pt. Visvesvar Vidyabhusan**

1. *Cānakya-Vijyam*—An elegant Sanskrit play with Sanskrit songs graced with high appreciations and good wishes of Dr. S. Radhakrishnan and other eminent scholars. Successfully staged and broad-cast.

   **Price—Rs. 4/-**

2. *Vālmīki-Sambardhanam*—Do

3. *Prabudba Himacalam*—A beautiful Sanskrit play in a new order, with a magnificent style and songs; full of patriotic and spiritual feelings depicting a beautiful picture of India. Staged, broad-cast and highly appreciated.

   **Price—Rs. 5/-**

4. *Uttara-Kuruksbetram*—A handsome play in simple and lucid Sanskrit with songs. Dealing on the charming and heart-rending events of Kuruksetra and Dvarakā under the divine and spiritual influence of Lord Srīkrisña; staged and highly appreciated.

   **Price—Rs. 4/-**

रूपकमञ्जरीग्रन्थमाला-४

अपर्णा-मञ्जु-नीलिमा-स्मृतिग्रन्थः

# उत्तरकुरुक्षेत्रम्

नाम

## नाटकम्

पश्चिमवङ्ग-शिक्षाधिकार-सेवातो विश्रान्तेन प्राध्यापकेन
पश्चिमवङ्ग-संस्कृतशिक्षापरिषदः प्राक्तन-सदस्येन
श्रीविश्वेश्वर विद्याभूषणकाव्यतीर्थेन

विरचितम्

# UTTARAKURUKṢETRAM

[Sanskrit Drama]

*By*

Pt. VISVESVARA VIDYABHŪṢAṆA KAVYATIRTHA




CALCUTTA
1968

कलिकाता रवीन्द्रभारती विश्वविद्यालयाध्यापक—
श्रीध्यानेशनारायण चक्रवर्ती एम्, ए, साहित्यशास्त्रिणा
प्रकाशितम् ।
"ऋषिधाम"
पोः अः—दत्तपुकुर, जिः—२४ परगणा, पश्चिमवङ्ग

प्राप्तिस्थानम् :
(१) ऋषिधाम
पोः अः—दत्तपुकुर,
जिः—२४ परगणा,
पश्चिमवङ्ग ।
(२) संस्कृत पुस्तकभाण्डार
३८ संख्यक विधान सरणी,
कलिकाता-६

*To be had of*:
(1) RISHI-DHAM
Po.—Dattapukur,
Dt.—24 Parganas,
West Bengal.
(2) Sanskrit Pustak Bhandar
38, Bidhan Sarani,
Calcutta-6.

मूल्यम्—रूप्यकचतुष्टयम्
**Price—Rs. 4 only**



*Published by*
Prof. Dhyanesh Narayan Chakravorty M.A. Sāhitya-Śāstrī
(Rabindra Bharati University, Calcutta)
**"RISHI-DHAM"**
Po.—Dattapukur, Dt.—24 Parganas, West Bengal.

**Printed by Calcutta Oriental Press (Pv.) Ltd. 9, Panchanan Ghose Lane, Calcutta-9.**

श्रीः

# प्राक्कथनम्

## [ भारतसंस्कृत्यां संस्कृतभाषायाः स्थानम् ]

भारतसंस्कृतेरितिहासे देवभाषायाः संस्कृतभारत्या अनुशीलनस्य एको विशिष्टाध्याय आस्ते। स हि वर्तमानकाले विस्मृतप्राय उपेक्षितश्च। अत्र प्रथममेव स्मृतिपथमायाति प्राचानाचार्य्याणां गौरवमयमवदानम्। छायास्निग्ध-मनोरम-पल्लीकुञ्जेषु तेषां स्वकीय-निभृतनिलये आसीत्तदा एकैकं संस्कृत-विद्यायतनम् व्यवहितं समन्ताद् दूरपल्लीव्रजेभ्यः।

संस्कृतसाहित्य-धर्मशास्त्र-पुराण-दर्शनादीनां पठनपाठनं तत्राभूत् शास्त्र-निष्णातानामध्यापकानां पुण्यावदानेन। अन्नदानपूर्वकं स्वकीयावासे आश्रय-प्रदानपूर्वकं च विद्यार्थिभ्यो विद्यादानव्रतस्य एतद्दृष्टान्त अतुलनीयोऽन्यत्र विरलश्च। स्वल्पाशन-वसना विद्याव्रता ब्राह्मणपण्डिता निभृते संस्कृतेरिमं मङ्गलप्रदीपं प्रज्वाल्य संरक्ष्य च तं देशस्य सांस्कृतिकजीवनगठने यां महतीं साधनामुद्यापयामासुः, सा चिरं विश्वमानसमनुभावयति। स्मरामि तदेतत्-प्रसङ्गेन, तेषां ज्ञानतापसानां धर्माचार्य्याणां मधुरव्याख्यान-शास्त्रालोचन-ललित-कथाकाकली-कलभाषितानि, अपराह्णकालीन-पल्लीवासि-प्रतिवेशि समावेशे च तेषां रामायण-महाभारत-पुराण-धर्मशास्त्रादीनां व्याख्यानानि, यानि जिज्ञासूनां कौतूहलं निवर्तयामासुः, विनोदयामासुश्च गृहिणां मानसानि शोकतापहरैः पुण्यकथाप्रसङ्गैरानन्दानुभावैश्च। विजातीय-शिक्षाप्रभावेणैषां पुण्यचरितानां शुभचरितेषु अधुना अनालोचनतया सामाजिकैरनादृतेषु, अनालोचितैश्च तत्तु ऐतिहासिकैः साहित्यकारैर्वा, तेषां निभृत-तपस्विनां कोर्तिसमुज्ज्वला सुधामयी सा तपस्या अद्यापि संस्कृतसाधनाया धारां संरक्षति। सत्स्वपि साम्प्रतिके काले अर्थकरीविद्यानां विचित्रसमारोहेषु पूर्वसूरीणां ज्ञानसाधनाया अनुक्रमेणा-स्मद्देशे संस्कृतविद्यानिलयाश्च वर्तमानाः पुरातनीं ज्ञानसाधनवृत्तिं कथमपि

संरक्षन्ति। तेनाद्यापि भारतवर्षे विभिन्नप्रदेशेषु ध्वनन्ति संस्कृतकवीनां ललित-कम्बुकण्ठाः सरस-सरल-संस्कृत-साहित्यविरचनमाध्यमेन। अद्यापि प्रवर्तन्तेऽत्र मध्ये मध्ये संस्कृतसम्मेलन-संस्कृतभाषण-संस्कृतनाटकानां प्रयोगादिभिः संस्कृतसाहित्यस्य तथार्य-संस्कृतेः प्रचारव्रतानि। नाना-प्रातिकूल्याद् युगधर्मविपर्य्ययाच्च क्लेशकण्टकिता, नितरां व्याहता चापि संस्कृतेः प्राणभूतेयं संस्कृतानुशीलनसाधना स्वकीयमहिम्ना पूर्वाचार्याणां साधन-गौरवेणात्मानं रक्षति। राजते तेनैषा सुचिरमनिर्वाण-ज्योतिःशिखया अस्माकं संस्कृतसाधना मन्दिरगर्भविलसिता मङ्गलदीपमालेव संस्कृतसाधकानां रसिकसुधीजनानां च अनुरागमाहात्म्येन। भारतात्मनो रक्षार्थं कल्याणार्थं च जनानां, सर्वाभ्युदयकरी चिरकल्याणमयी चैषा साधना अस्माकं मङ्गलकृते संरक्षणीया। सा हि अस्मान् मृत्युञ्जय-सुधारस-सञ्चारेण पुनातु।

तत् प्रथममेव दिव्यधामगतानां पूर्वाचार्याणाममरस्मृतिं समुद्दिश्य श्रद्धा-वन्दनं निवेदयामि।

**संस्कृतिः**—संस्कृतिर्मानवजातीनामितिहासं रचयति। धर्मेण सार्द्ध-मियम् अङ्गाङ्गिभावेन अनुस्यूता। इयं हि सङ्क्षेपतो धर्मस्य तथा मानव-सभ्यतायाः प्रकाशमूर्तिं जातीनामस्तित्वं संरक्षति, यच्छति च परिचयं तत्तत्-सभ्यतास्वरूपस्य। संस्कृतिं तथा धर्ममेव धारयन् सञ्जीवति मनुष्यसमाजः। तद्विरहितोऽसौ विलुप्तिं गच्छति। "धर्मो रक्षति धार्मिकम्"—तेन च, "धर्मो रक्षति रक्षितः" इति नीतिवाक्यं तत् सत्यं प्रचारयति। तस्मात् तेजसा सार्द्धमनलस्येव तत्त्वतो धर्म संस्कृत्योरन्वयः अविच्छेद्यमेकत्वं च।

किं च संस्कृतिः संस्मृतिर्वा मानवजातीनामात्मचेतनां बोधयति, उद्दीपयति, विकाशयति, प्रकरोति च मर्त्यान् महिमदीप्तान्, समुन्नतान् अक्षयांश्च। संस्कृतिरेव शाश्वतकल्याणस्य तथा ऐहिक-पारमार्थिक-सम्पदां लाभहेतुः। इयमेव जातीनां जीवनशक्तिर्यस्याः संरक्षणेन मानवा जीवन्ति, विसर्जनेन च विलुम्पन्ति धरातलेभ्यः। अतएव संस्कृति-संरक्षणेन जयश्रियः, तत्-परिवर्जने च पराजयः, इति इतिहास एव प्रमाणम्।

**कुरुक्षेत्रस्य वार्ता**—विश्वमानवानामितिहासे भारतसंस्कृतेरेकं गौरवोज्ज्वल-मालेख्यं चित्रितमस्ति। संस्कृतिपुष्टा पाण्डुतनया धर्मप्रतिष्ठिता सत्यधर्माश्रयेण विजयमाल्यम् आप्तवन्तः। अपरतः कौरवाः संस्कृतिविच्युता नीतिहीना धर्मभ्रष्टाः पराजयेन क्षयमापद्यन्त। पाण्डवानां क्लेशकरुणं कण्टकमय-जीवनं संस्कृतिमहिम्ना स्वधर्मबलेनैव अपराजेयमक्षयं च समभवत्। विजय-लक्ष्म्याः प्रसादेन पुष्टं तेषां चरितं शौर्य-वीर्य-त्याग-महत्त्वैः स्वधर्मपालनैश्च महिममण्डितं सर्वैरभ्यनन्द्यत। वृन्दावनेषु यो हि प्रध्वनितः प्रेममयो वंशीनिनादः, स हि संस्कृतेस्तथा जीवन-माङ्गल्यस्य वार्तां प्रचारयामास। तस्यैव प्राणविग्रहो भगवान् वासुदेवः कुरुक्षेत्रप्रान्तरे पाण्डुसुतानामाध्यात्मिको नायकः, तेषां जीवनदैवतस्वरूपं संस्कृतेर्दिव्यप्रवर्तकश्च। अवज्ञाय च संस्कृतिं, महालीलाभिनेतुस्तस्य शुभोपदेशमुपेक्षमाणाः कौरवा धर्मभ्रष्टा विनाशमाजग्मुः।

**द्वारकायां विसर्जनलीला**—अन्यतश्च द्वारकाया रङ्गमञ्चेषु संस्कृति-हीनतायाः सुकरुणोऽभिनयः प्रभासे अश्रुसिक्तां महाविसर्जनलीलां प्रकटयति। स हि यादवानां नीतिविच्युतेर्विषादमय इतिहासः।

मदोन्मत्ता यादवा उच्छिन्नसंस्कृतय आत्मचेतनाविहीना नीतिं परिहृत्य शुभबुद्धिं विसर्जयामासुः। शिवं सन्त्यज्य अशिवं भजमाना भोगैश्वर्यप्रसक्ताः शक्तिप्रमत्तास्ते परस्परकलहेन सत्यभ्रष्टा विलयं प्रापुः। तेन शोणितसिक्तां कलङ्कमलिनां स्वपुरीं सन्त्यज्य धरातलादन्तर्हिते तस्मिन् महालीलानायके भगवति श्रीकृष्णे, कनकहर्म्यमालिनी द्वारका प्रलयसिन्धुप्लावनेन ध्वंसमुपागता। आनन्दमुखराया वीरभूमे र्यदुराजधान्या इयं विलुप्तिः संस्कृति-विच्युताया एकस्या मानवजीवन-धाराया अश्रुमयमवसानं प्रचारयति। प्रभासतटे प्रध्व-नितोऽसौ विसर्जनस्य विषादमयो वंशीनिनादोऽद्यापि प्रतिध्वनति विश्वेषु।

**भारतसंस्कृतिः**—भारतवर्षस्य शुभसंस्कृतिः महर्षीणां तपसा सुगठिता, वीर्यमयी, अमृते प्रतिष्ठिता च। सर्वसम्पत्-समलङ्कृता मङ्गलमयी चेयं सत्यशिव-

सुन्दरस्यार्चनेन सकलाभ्युदयप्रदा कल्पलतेव प्राकाम्येन कल्याणनिचयं विततार। तेनासीदस्माकं जीवनं दिव्यप्रसादेन परिपुष्टं शान्तिसौख्यमयं च मृत्युञ्जयस्य करुणाभयमङ्गलवरेण।

**तस्या मर्मवाणी—"नायमात्मा वलहीनेन लभ्यः।"**

"आत्मानं विद्धी"ति उपनिषदां शुभाह्वानं चिरन्तनं जयति। संस्कृतिरात्म-साधनम्। सा हि धर्ममूला, सदाचरणैः सत्यसाधनै र्विकशिता चेतनां बोधयति, उद्दीपयति, पोषयति, संरक्षति चास्माकं जीवितं शक्तिदानेन। तेनैव वयममृतलाभाय शिवमाराधयाम, अशिवं परिहरेम, असत्यं जयेम, विन्देम च सर्वात्मकं विजयश्रियं वीर्यवलेन, आध्यात्मिक-पारमार्थिकैहिक-शक्तिसम्पदा च। अतो वयम् "अन्धं तमः प्रविशन्ति येऽविद्यामुपासते", "ते चात्महनोजनाः" इत्यादिकामौपनिषदीं वाणीं स्मृत्वा तपस्याम सत्य-साधनममृतलाभाय, "ॐ अग्ने नय सुपथा राये अस्मान्"इति।

**साम्प्रतिक-विपर्ययः**—दुर्भाग्यवशात् साम्प्रतिके काले एतद्देशेऽपि समुपस्थितो दुःखकरो वैदेशिक-भावतरङ्गः। तेन समुद्भवन्ति बहवोऽनर्थाः, अनैक्यानि, विश्रृङ्खलाः, असन्तोषाः मूढ़त्वं च। उत्कट-भोगलिप्सया, प्रभुत्वस्पृहा-संकीर्णस्वार्थचिन्तनकालुष्यैश्च दलगत-गोष्ठीगत-प्रादेशिक-प्राधान्य-प्रचेष्टादिभिश्च जनानां संहतिश्छिन्ना, विलुप्तश्च देशात्मबोधः। तेन सामग्रिकी देशहितैषणात्मिका शुभवुद्धिर्निर्वासिता। प्रभवन्ति च ततः सर्वथा अकल्याणानि। या हि अमृतमयी धर्मसंस्कृति र्वीर्यमयी एतावत्कालं महत्स्वपि विपर्ययेषु अस्मान् संरक्ष्य शक्तिसौख्यमण्डितान् महिमोज्वलांश्चाकरोत्, अद्यत्वे कापि दुष्टवुद्धिरस्मान् ततो विश्लेष्य दूरीकृत्यचास्मान्, परानुकारितया वीर्यरहितान् विधाय स्वधर्मविमुखान् भ्रष्टविवेकानसहायांश्च प्रकरोति। निरानन्द-मयी चैषा कलङ्कमलिना विच्युतिः प्रमत्ता अस्माकं सुमहता त्यागेन तपसा च लब्धं स्वाधीनतागौरवं म्लानीकुर्वती किं पुनरत्र द्वारकाया वियोगान्ता महा-विषादकरीं विसर्जनलीलां सूचयिष्यति?

अत्र चिरमेव स्मरणीयमेतद् यत् कुरुसुतानां यादवानां च परिणामे यत् सङ्घटितम्, नीतिच्युतानां मानव-समाजानां, जातीनां, देशानां च विषयेऽपि तत् सत्यं सम्भवतीति। श्रीभगवानस्मांस्तस्मान्महाभयात् परिरक्षतु। माऽभूच्च तस्य विपर्ययस्य ऐतिहासिकं पुनरावर्त्तनम्!

**त्राणोपायः**—अस्माभिरात्मरक्षणं विधेयम्। 'अमृतस्य पुत्रै' रस्माभिरमृते प्रतिष्ठितैस्तामेव आत्मसु अवस्थितां स्वकीयामृतमयीं सञ्जीवनशक्तिं संरक्ष्य संस्कृतिबलेन, धर्मेण, सत्येन, शीलेन, प्रज्ञया, शौर्येण, वीर्येण प्रेम्णा च सुसंनद्धैः शुचिस्निग्धे सुविमले जीवने विजयमहिमोज्ज्वलं विधातुरभयमङ्गलमानन्दप्रसादामृतम् उपभोक्तव्यम्, परिवेषणीयं च तत् निखिलजनेभ्यो विश्वेषां कल्याणाय।

अतः कुरुक्षेत्रे कुरुसुतानां शोचनीया परिणतिस्तथा द्वारकायां च यदुवीराणां प्रणाश, एतदुभयकादस्माकं शिक्षणीयमास्ते, यद् वीर्यमेव वीरं प्रसादयति, तपसैव च तत् समालभ्यते, विजयलक्ष्म्याश्चकरुणासिक्तं जयमाल्यं संस्कृतिसाधनमाहात्म्येन प्रापणीयेति।

**नाटकप्रसङ्गः**—उत्तरकुरुक्षेत्रमित्याख्यं नाटकं मम हृदयालेख्यानामपरं भावमयं रूपचित्रणम्। चत्वारिंशद्वर्षव्यापिनि ममाध्यापनजीवने देवभाषापरिशीलनसूत्रेण मदीय-च्छात्र-च्छात्रीणां निरन्तर-साहचर्य युक्तं मङ्गलावदानमाहात्म्यं सुचिरं स्मरामि।

किं च देवभाषा-सम्प्रचारार्थं मदीय-संस्कृताध्यापन-प्रसङ्गेन संस्कृत-साहित्यसम्भार-विरचने, संस्कृत नाटकप्रणयने तथा तत् प्रयोगादिषु चैषां सानुराग सहायताविधानादिकं सविशेषमुल्लेखमर्हति। अत्र च **श्रीमदोङ्कारनाथ-सीतारामदास**-महर्षि-पादानां चिराशीःकरुणालाभेन तस्मै श्रद्धाप्रणतिं निवेदयामि।

आनन्दसंवादश्चायं यत्, हुगली-संस्कृत परिषदः षोडशवार्षिक महा-सम्मेलने संस्कृतानुरागिण्यास्तत्रत्या मे प्राक्तनच्छात्रच्छात्रीवर्गाः सोत्साहमस्य

नाटकस्य मञ्चप्रयोगेषु परमनैपुण्यप्रदर्शनेन समवेतानां नरनारीनिवहानां सश्रद्ध-प्रशंसनं शुभेच्छां च समलभन्त। मद्विरचित-संस्कृत संगीतानामाधु-निकरीत्या मधुरस्वरसंयोजने तत्परिवेषणे च तैरसाधारणकृतित्वं प्रदर्शितम्। तद्विषये श्रीमत्तपन-वन्द्योपाध्यायं तथा श्रीज्योतिर्मयी वन्द्योपाध्याय-श्रीसुवर्णा वसु-प्रमुखां स्तथा मुख्यपरिचालकमध्यापक-श्रीसुनीलेन्दु भट्टाचार्य एम्, ए, बि, टि, प्रमुखं च सादरमभिनन्दामि। अभिनन्दामि च मदीय नाटकानामन्यत्र-प्रयोगेषु लब्ध प्रशंसनान् कलिकाता संस्कृतसाहित्यपरिषत्-सदस्यान् कृतिनोऽध्यापकांस्तथा चोत्साहिनो विद्यार्थिनः, संस्कृतानुरागिनश्च विभिन्नस्थानीयान् सुधीरसिक-सामाजिकानादरेण।

विभिन्नप्रतिष्ठानेषु मत्कृत-संस्कृतनाटकानां सुष्ठुप्रयोगसाफल्यात् तथा कलिकाताकाशवाणी-प्रतिष्ठान-कर्तृपक्षीयैरेषां पुनः पुनः सम्प्रचारण-सौजन्याच्च तत्तन्नेतृवर्गेभ्यः सश्रद्धकृतज्ञतां विज्ञापयामि, सफलं मन्ये च नितरां मम सारस्वतव्रतसाधनार्थं संस्कृतसाहित्यविरचनश्रमं नानास्थानीय-विद्यार्थि-विद्यार्थिनीमण्डलानां रसिकानां सुधीजनानां च उपचीयमान-संस्कृतानुराग दर्शनेन, दूरदूरान्तरेभ्यश्च सुचेतसां महात्मनां शुभाशंसनाभिनन्दनपत्रलाभेन। अतो विजयन्तां पुण्यशीलाः, रमतां च सुरभारती सतामादरेण जगतां श्रेयोलाभाय!

**आवेदनम्**—अर्थसङ्गतेरभावादवशिष्टानां मद्विरचित-ग्रन्थानां प्रकाशनं व्याहतं तिष्ठति। पुरा विद्योत्साहि-नरपालानां तथा च पुण्यचरितानां भूस्वामिनामानुकूल्येन, दानधर्मव्रतेन च संस्कृतसाहित्यप्रचारः समपद्यत। तेषा-मौदार्यमण्डिता शुभचिकीर्षा सद्ग्रन्थप्रकाशने शास्त्र-संस्कृति-संरक्षणादिषु च विशेष सहायभूताऽभवत्। अधुना चैतन्महत्कृत्यं राष्ट्राधिनायकानामुदार-चेतसां च मनीषिणामुपरि स्वभावतः समापतितम्।

भारत संस्कृतेर्धारकवाहकानां स्वदेशीयानां कल्याणार्थमत्र विषये देशनाय-कानां महतां च सानुग्रह दृष्टिमानुकूल्यं च प्रार्थये!

**श्रद्धानिवेदनम्** :—मम संस्कृतसाहित्यप्रचारेऽशेषगुणालङ्कृतस्य वाराणसी-संस्कृत-विश्वविद्यालयोपकुलपतेर्महामणीषिणः **डः श्रीगौरीनाथ शास्त्रि-** एम. ए. पि. आर्. एस्—डि. लिट् महोदयस्य निरन्तरशुभेच्छा-प्रेम-प्रणोदितां सहयोगितां स्मरामि। तस्मै मे सबहुमान-श्रद्धाविनयपुरःसरां कृतज्ञतां निवेदयामि।

सारस्वतसाधनायां मम सुचिरशुभानुध्यायिनामशेषगुणालङ्कृतानां विद्या-प्रेम-तपोनिलयानां पण्डितराज-**श्रीश्रीजीवन्यायतीर्थानां** तथा परम-माननीय-कूलपतिकल्प - **महामहोपाध्याय - श्रीकालीपदतर्काचार्याणां** च सप्रेमशुभाशंसनादिकं सविशेषं स्मरामि। एभ्यो महामनस्विभ्यो मे सुनिविड़-श्रद्धा-प्रीति-नति-पुष्पाञ्जलिं निवेदयामि।

**उपसंहारः**—एतन्नाटकस्य कलिकाता-संस्कृत-साहित्य-परिषत्-पत्रिकायां प्रकाशने ततश्च ग्रन्थरूपायणे प्रथममेव सानन्दं स्मरामि कुलशील-विद्यादि-भूषणस्य यादवपुर-विश्वविद्यालय-संस्कृताध्यापक — डः **श्रीगोपिकामोहन भट्टाचार्य** एम, ए, डि-फिल्, न्यायतीर्थप्रमुखाणां तथा संस्कृत-परिषद्-विद्यालयाध्यक्षाणामशेषगुणालयानां पण्डितप्रवर — **श्रीरामधनकाव्य-व्याकरणतीर्थ** महोदयानां च सानुरागसाहाय्यकं यदन्तरेणास्य प्रकाशनम-सम्भवमभिष्यत्। एतेषां सुचेतसां समूहकल्याणं विजयश्रियश्च कामये।

मदात्मजेन रवीन्द्रभारती-विश्वविद्यालयाध्यापक—श्रीमद् ध्यानेश-नारायण-चक्रवर्ति-साहित्यशास्त्रिणा तस्य सारस्वतव्रताङ्गभूत—संस्कृतसाहित्यप्रचार-साधनायाः साफल्यार्थमस्य ग्रन्थस्य प्रकाशने सौष्ठवविधाने च सर्वविध आयासः परिगृहीतः पूर्णतां प्रापितश्च साफल्येन। देवी ब्रह्मवाणी महतां शुभाशिषश्च संवर्द्धयन्तु श्रीमन्तं करुणाप्रसादेन।

**कृतज्ञताज्ञापनम्**—परिशेषे संस्कृतसाहित्यप्रचारे मम सुचिरशुभानु-ध्यायिनं "सुदर्शन" पत्रिकासम्पादकं **परमभागवत-श्रीशिशिरकुमार ब्रह्मचारिणं**, हुगली-संस्कृत-परिषत्-सम्पादकमशेषगुणालङ्कृतं **श्रीकाशीनाथ**

विद्यानिधि - काव्यतीर्थमहाशयं च मम श्रद्धाप्रेमपुरःसरां कृतज्ञतां विज्ञापयामि। एतद्विषयेषु मम सर्वसहायकं कलिकाता महा-उद्धारएमठ-वासिनमशेष-प्रेमभाजं **श्रीमद् बन्धुदास ब्रह्मचारिणं,** मदीयसुहृद्वर्गं तथा संस्कृततानुरागिणश्च सर्वान् मम सादरशुभेच्छापरिपूतां निविडप्रीतिश्रद्धां प्रत्यभिनन्दनञ्च ज्ञापयामि। ॐ तत्सत्।

ॐ रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्। ॐ ब्रह्मार्पणमस्तु।

निवेदनमिति—

| | |
|---|---|
| दत्तपुकुर पल्लीस्थ | सुरभारती-चरणारविन्द-मकरन्द-सुधानिस्यन्द- |
| "ऋषिधामा"ख्य-भवनात् | पानव्रतिणो |
| १३७५ वङ्गाब्दीय | विनयावनत—**श्रीविश्वेश्वर विद्याभूषण** |
| दोलपूर्णिमा-दिवसीयमेतत्। | **देवशर्मणः।** |

# उत्सर्गपत्रम्

ये खलु तिमिराच्छन्ने मदीय हृदयमन्दिरे ज्ञानस्य मङ्गलदीपं प्रज्वाल्य निरन्तर-शुभस्नेह-विद्यादानैः सारस्वत-साधनायां मां प्रावर्तयन्, येषां पुण्यावदानमाङ्गल्यैस्तपो मे सुधा-सिक्तं महिम-मधुरं च भवति, नित्याशीर्दृष्टि-मङ्गलकिरणधारां विकिरतां दिव्य- धामगतानां तेषां गुरुपादानामुद्देशतो ग्रन्थमिमं श्रद्धाप्रणतो निवेदयामि।

निवेदनमेतत्
चिरस्नेहप्रार्थिनो-दीन—
श्रीविश्वेश्वर विद्याभूषण देवशर्मणः।

# गुरुमण्डली

(१) श्रीमद् ऋषि कालीकिङ्कर स्मृतिभूषण—पितामहपादाः ।

(२) अशेष शास्त्राचार्य-कृष्णकान्त कृतिरत्न—पितृपादाः ।

(३) चट्टल-संस्कृतमहाविद्यालयाध्याक्ष-महामहाध्यापक-
रजनीकान्तसाहित्याचार्य—ज्येष्ठतातपादाः ।

(४) चट्टल-संस्कृतमहाविद्यालयोपाध्यक्ष—योगाचार्य-कालीकिङ्कर
तर्कपञ्चाननाः ।

(५) पुण्यश्लोक-रजनीकान्ततर्कचूड़ामणि—गङ्गाधर काव्य-
व्याकरणतीर्थ-कलिकाता संस्कृत महाविद्यालयाध्यापक—
राजेन्द्रनाथ विद्याभूषण,-गुरुपादाः ।

# शुभाशंसनम्

हुगली-संस्कृतपरिषदायोजित-पश्चिमवङ्ग संस्कृत महासम्मेलनपक्षतः कविवर श्रीविश्वेश्वर विद्याभूषण काव्यतीर्थ महोदयानां संवर्द्धनम्।

लब्ध्वा जन्म शुभद्विजान्वय-महासिन्धौ य इन्दूपमः
स्निग्धः सुन्दरभास्वराकृतिधरः शान्तस्वभावः स्वतः ।
विद्याकान्तिकिरश्चिराय रचयन्नन्ते वसन्मानसम् ,
स्वच्छं भावविशारदं स जयताद् विश्वेश्वरो भूसुरः ॥
विद्याभूषण-काव्यतीर्थपदभाग् विश्वेश्वरः साधकः
श्रीसारस्वतमन्दिरस्य सरसस्येन्दीवरश्रीमतः
नाना नाटक-काव्य-कोमलकला-मालाभिरभ्यर्चयन् ,
देवीं वाचमसौ विराजति सतामानन्दसन्दीपनः ॥
ललितपदमृणालालम्बिता पद्यमाला,
निजकरकलिता या पद्ममालाभिरामा ।
लसति सुरगिरायाः कण्ठहारायमाणा,
दिशतु सुरभिभारं सैव विश्वेश्वराय ॥
अथानन्दभरेण संस्कृत महासम्मेलनं भास्वरं
श्रीविश्वेश्वरसंज्ञकं कविवरं संवर्द्धयद् भ्राजते ।
श्रीमान् मानवसङ्घ-मङ्गलकरं ग्रन्थोच्चयं कल्पय-
न्नायुः पूर्णमवाप्य भारतधरा-धारा-धुरामावहेत् ॥

षोडशवार्षिक महासम्मेलने
१३७४ वङ्गाब्दीय
सौरचैत्रस्य दशमदिवसीयम् ।

परिषत्-पक्षतो विरचितं
श्रीश्रीजीव न्यायतीर्थेन ।

हुगली राष्ट्रीय विद्यालयस्य प्रधान संस्कृताध्यापक-
श्रीविश्वेश्वर-विद्याभूषण-काव्यतीर्थ-काव्यरत्न-
महोदयस्य अवसरग्रहणोपलक्ष्ये

## सम्वर्द्धनम्

भो भोः सभ्यजना, अयं सुविदितः सद्ब्राह्मणो धार्मिको
नित्याध्यापन-पूजनादि-निरतो वेदार्थवित् तत्त्वविद् ।
सम्मानं यदि दीयतेऽद्य वत तत् किं नूतनत्वं व्रजे-
दित्येवं न हि शक्यते गणयितुं केनास्य संवन्दनम् ॥१॥
वैचित्र्यं तव चित्रकाव्यरचने वैदग्ध्यमक्लेशतो
नाना भावमयी कथा विकथने हास्यं सदास्ये च ते ।
वेदान्तेषु निगूढतत्त्वविषये कास्माकमासीत् कथा
क्वाप्येवं स्मितपूर्णभाषि सुजनस्यालाप आकर्णितः ॥२॥
हीनं तत् परसेवनं बहुविधक्लेशापमानास्पदं
यच्चूर्णीकुरुतेऽत्र धर्ममपि सद्भावञ्च सत्याश्रयम् ।
त्यक्त्वा तच्चिरमेव मोहमदिरा-लोभास्पदं सन्ततं
विश्रामं लभतेऽद्य शान्तसुजनः स्वाधीनतामाश्रितः ॥३॥
अमन्दं वात्याकम्पित-दलित-विभ्रान्त-कमलाद्
बलाद्दूरे नीतं यदि भवति पद्मान्तरमपि ।
चिरस्नेह-प्रेमोत्कलन-ललिते वै सुविहिते
न तत्र स्याद्दोषः कतर-कमलस्यापि सुजनः ॥४॥
सुस्थो जीव सुपण्डित ! प्रतिदिनं स्वेष्टञ्च ते वर्द्धतां
याहीतोऽपि तथा विलीनमनसा विष्णोः पदं संस्मरन् ।
आयाहि स्वयमत्र सर्वसमये विद्यालये स्वेच्छया
काम्यं ते शुभयाचनं विभुपदे, शम्भुः स संप्रीयताम् ॥५॥
निवेदनमिति—

१८८१ शकाब्दीय
सौर-ज्यैष्ठस्य तृतीय-
दिवसीयम् ।

गुणमुग्ध-साध्यापकच्छात्राणाम् ।
भट्टपल्लीवास्तव्याध्यापक—
**श्रीविश्वनाथ काव्यव्याकरण**
**न्यायतीर्थेन विरचितम् ।**

## सारस्वतसाधना—स्वरचितग्रन्थमाला

( Works by the author )

| | | |
|---|---|---|
| दस्यु रत्नाकरम् | ... ... | संस्कृतदृश्यकाव्यम् |
| भरत-मेलनम् | ... ... | ,, |
| वाल्मीकि-संवर्द्धनम् | ... ... | ,, |
| प्रबुद्ध-हिमाचलम् | ... ... | ,, |
| उत्तर-कुरुक्षेत्रम् | ... ... | ,, |
| मातृपूजनम् | ... ... | ,, |
| काशी-कोशलेशम् | ... ... | ,, |
| ओङ्कारनाथ-मङ्गलम् | ... ... | ,, |
| विष्णुमाया | ... ... | ,, |
| द्वारावती | ... ... | ,, |
| उमातपस्विनी | ... ... | ,, |
| काव्यकुसुमाञ्जलिः | ... ... | संस्कृत-खण्डकाव्यम् |
| वनवेणुः | ... ... | संस्कृत-गीतिगुच्छम् |
| मणिमालिका | ... ... | संस्कृत-कथासाहित्यम् |
| पद्मराग | ... ... | वङ्गभाषानिबद्ध-कवितासम्भारः |
| मानसी | ... ... | वङ्गभाषानिबद्ध-प्रबन्धावली |
| गङ्गासुरतरङ्गिणी | ... ... | संस्कृत-काव्यम् |
| Message of the Divine Mother | .. | आङ्गलभाषामय-निबन्धाः |

---

# पात्रवर्गः

पुरुषाः—

सूत्रधारः
श्रीकृष्णः
अर्जुनः
युधिष्ठिरः
धृतराष्ट्रः
नारदः
यादवाः
तपस्विनः
दारुकः
हस्तिनापुरसैनिकाः
सुलोचनः
विनोदः
दधिविक्रेता
मोदकविक्रेता
पाण्डव-राजसदस्याः
पुरोहिताः
परीक्षित्
शृङ्गी
शमीकः
शुकदेवः
जनमेजयः
ब्राह्मणवेशी आस्तिकः
ब्राह्मणाः
यज्ञस्थलवासिनः

स्त्रियः —

माधविका ( नटी )
गान्धारी
द्रौपदी
कुन्ती
रुक्मिणी
सत्यभामा
पुरलक्ष्मीः
पुराङ्गनाः
वनलक्ष्मीः

# उत्तरकुरुक्षेत्रम्

## प्रस्तावना

नान्दी

कालिन्दीकुञ्जचारी नवघनरुचिरः श्यामलः शान्तमूर्त्ति-
र्यः कंसध्वंसकारी कुरुकुलसमरे दिव्यगीताप्रचारी ।
प्राणानन्दः प्रमूर्तः सुर-नर-रमणो गोपिकाचित्तचारी
सोऽयं पायाच्चिरं वस्त्रिभुवनशरणं पापहारी मुरारिः ॥

नान्द्यन्ते सूत्रधारः—अहो, अद्य तावन्मधुपूर्णिमोत्सवप्रसङ्गेन नानादिग्देशेभ्यः समागता नरनार्योऽत्र प्रातर्माधवमर्चयित्वा अधुना श्रीमल्लक्ष्मीनारायण-मन्दिरप्राङ्गणे आनन्दं कुर्वन्ति । पश्यामि तेन—

आयाता मधुपूर्णिमाद्य भुवने फुल्लारविन्दानिला
यस्यां गोपवधूविलाससुखितः संक्रीडितो माधवः ।
कालिन्दीपुलिने तदत्र ललिते वृन्दावने श्रीहरि-
र्नित्यं दीव्यति चिन्मयात्मरसिकस्तद्भावुकैर्भाव्यते ॥

किञ्च—

इत्थं कोकिलगीतिमुखरे कालेऽत्र वासन्तिके
पुष्पाणां स्तवकैर्हसन्ति मधुरं कुञ्जाग्रवल्ल्यो वने ।
भृङ्गाणां कलगुञ्जितैश्च भवति प्रेम्णां महाप्लावनम्
आनन्दः कुसुमायते स्थलजले विश्वं नरीनृत्यते ॥

यातु । आह्वयामि नटीं तावत् । (नेपथ्यद्वारं गत्वा) आर्ये माधविके !

नेपथ्ये माधविका—(उच्चैः) देव, अद्य किमादिशति भवान् ?

सूत्रधारः—भद्रे, वक्तव्यमस्ति किञ्चित्। तद् आगम्यतामचिरेण।

[प्रविशति नटी माधविका]

प्रविश्य माधविका—नमोऽस्तु आर्याय। (प्रणमति) एषाऽहमागच्छामि।

सूत्रधारः—भद्रमस्तु देवि! वार्तां ते ज्ञापयामि। अद्यात्र शुभ-सन्ध्याया-मस्माकमभिनयदर्शनार्थं माननीयाः सज्जनाः प्रेमभक्तिधना मातृमूर्तयश्च साग्रहं प्रतीक्षन्ते। तदेतेषां मनोरञ्जनाय अस्माभिः संस्कृतनाटकं प्रयोक्तव्यमिति।

माधविका—( सहर्षम् ) साधु साधु! वयमपि भवदादेशपालनार्थं सुसज्जिताः कालं प्रतिपालयामः। अधुना आर्यस्यानुमतिरेव प्रमाणम्।

सूत्रधारः—साधु भद्रे! युष्माकं यथायथमुद्योगं विदित्वोल्लसामि। तद् गत्वा विज्ञाप्यन्तामार्य-पारिपार्श्विकादयो यदद्यास्माभिरुत्तरकुरुक्षेत्रं नाम संस्कृतनाटकं सामाजिकानां विनोदायाभिनेतव्यमिति। तथा—

उत्तरमितिशब्दाद्यं कुरुक्षेत्रपदान्वयम्।
इदं हि नाटकं नाम चक्रे विश्वेश्वरो द्विजः।
कृष्णाकान्तात्मजः श्रीमान् सारस्वतपदाश्रयः।
विदुषां परितोषाय भारतीकरुणाशया॥

माधविका—अहो, विजयते भवान्। तद् देव, किमधुना सहृदयाः सामाजिका देवभाषायामनुरागशीला भवन्तीति परिज्ञातुं कौतूहलं मे वर्त्तते।

सूत्रधारः—सम्यगुक्तमत्रभवत्या। इयं हि देवभाषा च्छन्दोमालिनी गद्य-पद्यमयी रसमञ्जुला न कस्य श्रवणमानसमनुरञ्जयति? संस्कृतभाषा हि भारतवर्षस्य प्राणमयी वाङ्मूर्तिरानन्दरसोज्ज्वला शाश्वती मर्मवाणी। अध्यात्मतत्त्वमयी, वेदोपनिषत्-पुराणादिशास्त्रेषु निहिता सुललित-कथासाहित्य-नीतिशास्त्रविमण्डिता चेयं युगे युगे भारतवर्षस्य मर्मवाणी

प्रचारयति विश्वभुवनेषु। किञ्च, अतीतकीर्तिमुखरा चेतःप्रबोधिनी भारतकृष्टिप्रचारिणी चेयं सुरभाषा अद्यापि ललितरसभूयिष्ठमजस्र-नव-नव-साहित्यसम्भारं सम्भाव्य सारस्वतानामवदानेन विश्वचित्तं विनोदयति।

माधविका—अहो, यथार्थमुच्यते देवेन। सुधामयी सुरभारती स्वमहिम्ना चिरं विजयते। किञ्च, संस्कृतविरहितं भारतवर्षं न कदापि सम्भवपरं न वा कथमपि एतच्चिन्तनीयम्। यतः, आसमुद्रहिमाचलान्तेऽस्मिन् उपमहादेशे भारतवासिनां मर्मग्रन्थिस्वरूपिणीयं पुण्यभाषा गृहिनिलय-देवायतन-तीर्थतपोवनेषु तथा विद्वज्जनसम्मेलनेषु च दैनन्दिनोपासन-यज्ञकर्म-देवार्चन-तर्पण-पितृपूजाप्रसङ्गेन स्वाध्याय-पुण्यमन्त्रस्तुतिवन्दनाद्यर्थं सारस्वतविनोदनार्थं च व्यवह्रियते। गृहमेधिभिस्तथा वानप्रस्थसाधन-परैस्तपोधन-योगि-महर्षिभिश्चेयं नित्यं परिषेव्यते। अतः कथमस्मत्सुचिर-जीवनरसभूताम् अमृतात्मिकाममरभारतीं वयं परिहरामः?

सूत्रधारः—साधु भद्रे। सम्यगभिहितं भवत्या। नवनवसर्जनमयी सुमङ्गलेयं मृत्युञ्जयिनी देवभाषा आकल्पान्तमात्ममहिम्ना विराजिष्यते इत्यत्र कः सन्देहः? अतोऽहममरभारतीपदारविन्दसेवनव्रतिन एतन्नाट्यकारस्योक्ति-मत्र समुद्धृत्य वदामि—

पेपीयन्तां सुधां सर्वे संस्कृतसागरोद्भवाम्।
मानसे रमतां नित्यं भारते सुरभारती॥

माधविका—अहो, धन्या वयं सुरभारतीमहिमानुशीलनेन। तद् देव, अचिरेणाहं नेपथ्यं गत्वा माननीयान् पारिपार्श्विकादीन् भवन्नियोगं विज्ञापयामि। जयतु सुरभारती। [ प्रस्थानम् ]

सूत्रधारः ( उपसृत्य )—अधुनाहं निश्चिन्तो जातः। तदहमपि कृत्यार्थमुद्-युक्तो भवामि। तेन चादौ वन्दे श्रीभगवन्तम्।

(कृताञ्जलिः) आनन्दमूर्तिपरमो यमुनाविहारी
विश्वम्भरस्तनुभृतां हृदिपद्मचारी ।
गोविन्दमाधवहरिर्दुरितापहारी
कृष्णश्चिरं विजयतां कलवेणुधारी ॥

[उद्देशतः प्रणम्य प्रस्थानम् ]

—इति प्रस्तावना—

# प्रथमाङ्कः

## प्रथमदृश्यम्—कुरुक्षेत्रप्रान्तभूमिः

श्रीकृष्णः—( स्वगतम् ) धर्म्मक्षेत्रं कुरुक्षेत्रम्। वीराणां रणभूमिर्ममैव च लीलाक्षेत्रमिदम्। ( अर्ज्जुनं प्रति ) पार्थ, अत्र समराङ्गनशायितैर्भारतवीरैः स्वर्गः सम्प्राप्तः, युष्माभिश्च लब्धं विजयमाल्यम्।

अर्ज्जुनः—यादव, स्वजनवियोगाहतस्य ममेदं विजयगौरवं न खलु सुखाय भवति। छिन्नवृन्तानामिव कुसुमदलानामस्तप्रतिष्ठा न हि शान्तिसौख्यमावहति।

श्रीकृष्णः—कथमयं निर्वेदो वीर ? क्षत्रियस्तु न खिद्यति। न हि समुचितोऽयं विषादः ?

अर्ज्जुनः—केशव, क्व नु तेऽस्मदात्मीया रणदुर्म्मदा महावीरा येषां सान्निध्यमस्मच्चिरमीप्सितम् ! ते च मे आनन्दायिनो ज्ञातय आचार्या बान्धवाश्च न खलु साम्प्रतं जीवन्ति।

श्रीकृष्णः—मैवं धनञ्जय ! धर्म्मयुद्धं क्षत्रियाणां श्रेयसे गौरवाय च। अतो वीराणां कृतेऽनुशोचनं न हि वीरचूडामणेस्तव युज्यते।

अर्ज्जुनः—( स्वगतमूर्द्ध्वदेशमुपलक्ष्य ) नमोऽस्तु पूर्व्ववीरेभ्यः। (प्रकाशम्) किन्तु यदुपते, ते हि अस्माकमाबाल्यक्रीडासङ्गिनो मृगयायां विद्याभ्यसने च प्रियसहचराः पश्चात्तु राज्यलोभेन प्रतिपक्षभूता अधुना चिरनिद्रिता भवन्ति। ( सोच्छ्वासम् ) अधुना तानश्रुनीरैस्तर्पयामि।

श्रीकृष्णः—कौन्तेय, संसाररङ्गमध्ये कर्म्मसूत्रान्नराणामागमनिर्गमाः संयोगवियोगाश्च। धीरस्तेन न मुह्यति।

अर्ज्जुनः—सखे, कथं विस्मरामि पितृ-पितामहगतं सम्पर्कम् ? तद्धि आत्मिकं बन्धनं प्राणेषु प्रवाहयति सञ्जीवनीं चेतनाधाराम्। सैव स्मृतिर्विह्वलयति मानसम्।

श्रीकृष्णः—वीर, विचित्रमिदं संसारनाट्यम्। नटानामिवात्र मनुष्यैरविचल-चेतसा अभिनेतव्यम्। क्षत्रकुलजातोऽसि। तत् स्वधर्म्मपालन-साफल्यात् कुरुवीराणां कीर्त्तिस्त्वया रक्षिता।

अर्ज्जुनः—( स्वगतम् ) इदं हि कुरुक्षेत्रमस्मत्पितॄणां कर्म्मभूमिस्तपः-क्षेत्रञ्च। अधुना श्मशानभूमिश्चैतत्।

( श्रीकृष्णं प्रति ) केशव, वीरकीर्त्तिविमण्डितेयं पुण्यभूमिरधुना अन्तः-शोणितप्रवाहव्याकुला धूलिपांशुलविशालप्रान्तरा अतीतां संहारलीलां स्मारयति। अतो विह्वलोऽस्मि शोकेन !

श्रीकृष्णः—क्लैब्यं मास्म गमः पार्थ। स्मर्य्यतां गीतायां मे यदुक्तम्। कथं विस्मृतवानसि तत्त्वम् ?

अर्ज्जुनः—केशव, कथं विस्मरामि वृत्तान्तम् ? अद्यापि ध्वनतीव श्रुतिपटे प्रलयङ्करः स दुन्दुभिनादः ! शोकार्त्तानां वीरनारीणां करुणविलाप-ध्वनिरद्यापि धिक्करोति मम विजयगर्व्वम् ! ( मौनं तिष्ठति )

[ प्रविशति युधिष्ठिरः ]

प्रविशन् युधिष्ठिरः—सा हि सङ्गीतायते श्रुतिमूलेऽभयमङ्गलवाणी यतो धर्म्म-स्ततो जय इति। ( अर्ज्जुनं विलोक्य श्रीकृष्णं प्रति ) केशव, तीर्थीभूतं कुरुक्षेत्रं वीराणामात्मदानेन। अत्र हि अस्मत्पूर्व्वजाताः कुरुप्रवीरा-स्तपसा वीरधर्मपालनेन च गौरवं गताः।

श्रीकृष्णः—साधु साधु, धन्योऽसि धीमन् पूर्व्वकीर्त्तिस्मरणेन। वयमपि युष्माकं सम्पर्केण धन्यतां गताः।

युधिष्ठिरः—अतोऽस्मत्पितॄणां धर्म्मभूमिं कर्म्मभूमिञ्चेमां पुण्यभूमिं प्रणमामः। ( उद्देशेन प्रणमति )



श्रीकृष्णः—विजयतां धर्म्मपाल। धर्म्मव्रत त्वामभिनन्दामि।

युधिष्ठिरः—( अर्ज्जुनं निरीक्ष्य ) किन्तु यदुपते, कथमिह धनञ्जयो विमनायमानस्तिष्ठति ? ( अर्ज्जुनमुपगम्य ) भ्रातः, किं ते विषादकारणम् ?

श्रीकृष्णः—धर्म्मनन्दन, शून्यकुरुक्षेत्रप्रान्तरदर्शनेन समुत्थितो धनञ्जयस्य शोकावेगः। अतीतः स्वजनवियोगोऽस्य स्मृतिपथमुद्गम्य विह्वलयति गाण्डीविनम्।

युधिष्ठिरः—( अर्ज्जुनं प्रति ) अलं विषादेन वीर ! उत्तिष्ठ, परिहर मोहम्। न हि शोभते संग्रामविजयिनस्ते चित्तचाञ्चल्यम्। ( कराभ्यामुत्तोल्य शिरश्चुम्बति )

अर्ज्जुनः—( कृताञ्जलिः ) आर्य्य, क्षन्तव्योऽहं दासः। अनुगृहीतोऽस्मि स्नेहेन। ( प्रणमति )

युधिष्ठिरः—चिरं जीव वत्स ! वर्द्धस्व गौरवेण। ( श्रीकृष्णं प्रति ) केशव, एष मे प्रियोऽनुजस्तवैव चिरप्रणयपात्रं सर्व्वथा त्वदनुशासने वर्त्तते।

श्रीकृष्णः—( सहर्षमर्ज्जुनं करेण धृत्वा ) साधु साधु वीर ! कौन्तेय, जानीहि न मे भक्तः प्रणश्यति।

अर्ज्जुनः—( कृताञ्जलिः ) मधुसूदन, यथा नियुक्तोऽस्मि तथा करोमि। अतो वन्दे भवन्तम्। ( प्रणमति )

श्रीकृष्णः—सखे, विजयस्व गौरवेण।

युधिष्ठिरः—( श्रीकृष्णं प्रति ) यादव, परिसमाप्तम् अस्माकं कुलधर्म्मपालनं तव प्रसादेन। लब्धञ्च राज्यं परिपाल्यते धर्म्मेण। किन्तु, किमनेनाहं करोमि ?

श्रीकृष्णः—कथम् ?

युधिष्ठिरः—(सावेगम् ) द्रुतं महासिन्धुतटमभिधावति मे जीवनरथः !

श्रीकृष्णः—धर्म्मनन्दन, जातं मया तव चित्तवैराग्यम्। किञ्च, प्राप्ते वयसि अभिमन्युनन्दनेन, तस्मै राज्यभारं समर्प्य करिष्यसि मोक्षसाधनं श्रेयोलाभाय।

युधिष्ठिरः—जयतु यादवेश्वरः। एवं विजयते चिरं भवान् अस्माकं शुभानुध्यानेन।

अर्ज्जुनः—जय केशव, जय केशव।

श्रीकृष्णः—( युधिष्ठिरार्ज्जुनौ समुद्दिश्य ) मयापि समाप्तं धर्मराज्यसंस्थापनम्। मतिमन्तः! आह्वयन्ति मां यादवाः। पिता च सोत्कण्ठो मां प्रतीक्षते। तद् इच्छाम्यहं स्वपुरप्रतिगमनाय।

युधिष्ठिरार्ज्जुनौ—( सोच्छ्वासम् ) यादव, यादव!

श्रीकृष्णः—वर्द्धन्तां सखायः। ( अर्ज्जुनं प्रति ) देदीप्यस्व पार्थ! किं पुनर्वक्ष्यामि? भद्रमस्तु वः।

( युधिष्ठिरं प्रति ) कौन्तेय, अभिभूतोऽस्मि। ( उच्छ्वसति ) आवद्धोऽस्मि पाण्डवानां प्रणयवन्धनेन।

अर्ज्जुनः—केशव, दीना वयं त्वया विरहिताः कथं जीवामः?

श्रीकृष्णः—अलं विषादेन प्रिय! एषोऽहं युष्माकं स्नेहवन्धनेन चिरसंवद्धस्तिष्ठामि। तद् विजयध्वं प्रणयमाहात्म्येन।

युधिष्ठिरः—धर्म्मो वर्द्धताम्। जयोऽस्तु जनार्द्दनस्य।

श्रीकृष्णः—भद्रमस्तु प्रणयास्पदानाम्। धर्म्मो युष्मान् रक्षतु।

[ प्रस्थानम् ]

अर्ज्जुनः—असहनीयः कृष्णविरहः! अहो, दुर्विषहो विच्छेदः!

युधिष्ठिरः—धैर्य्यमुपेहि प्रिय! ऐषोऽस्माकं प्रियसखो न कदापि अस्मांस्त्यजति। तदेहि! जननी किलास्मान् प्रतीक्षते। [ प्रस्थानम् ]

अर्ज्जुनः—वासुदेव, वासुदेव! [ प्रस्थानम् ]

[ प्रविशति सहचरीपरिवृता पुरलक्ष्मीः, गायन्ति सर्व्वाः। ]

गानम्

रणभारपीडिता जर्ज्जरमेदिनी

करोति रक्तस्रोतःस्नानम्।

सुषमाहीना प्रकृतिर्दीना
मुञ्चति तप्तमश्रुजातम् ॥
आकुलविषादः स्वनति पवने
ध्वनति विलापो गगने भुवने
कुसुममालिनि जय पुरवासिनि
पृथ्वि जननि कुरु उल्लासम् ।
मा कुरु करुणे मरणविलासम् ,
विकाशय धरणि शान्तिहासम् ॥

इति प्रथमाङ्के प्रथमं दृश्यम् ।

---

## द्वितीयं दृश्यम्—हस्तिनापुरप्रासादः

धृतराष्ट्रः—( स्वगतम् ) विषमोऽपत्यस्नेहः । स हि सर्व्वानर्थकरो मम शोकाय भवति । हा पुत्र दुर्योधन, हा हा अभिमानधनाः शतपुत्राः ! अहो, एकोऽपि न जीवति । स्नेहपालिताः पापकर्म्मसु समर्थिताश्च ते मे तनयाः सुखदुःखान्यतिक्रम्य चिराय निद्रायन्ते । अहो, शल्यमिव उत्पाटयति हृदयं मे पुत्रशोकः ।

[ प्रविशति गान्धारी ]

प्रविश्य गान्धारी—कुरुनाथ !

धृतराष्ट्रः—केयम् ? गान्धारी ? एह्येहि शतपुत्रजननि !

गान्धारी—न हि युज्यते नाथ, एतदभिधानम् अभाजनेषु मद्विधेषु ।

धृतराष्ट्रः—राजनन्दिनि, धारय माम् । नाहं क्षमोऽस्मि प्राणधारणे ।

गान्धारी—राजन्, शतपुत्रगौरवेण प्राक् सौभाग्यवत्यपि साम्प्रतमहं दीनहीना शोचनीया च। वृथाहं जीवितं धारयामि।

धृतराष्ट्रः—देवि!

गान्धारी—महाराज, नाहं मानमर्हामि। एषा ललाटलिपिर्मामनाथां करोति।

धृतराष्ट्रः—(स्वगतम्) अहो, नियति-विधानम्। एषा दावदग्धा वल्लरीव परिक्लिश्यते कुरुराजेश्वरी दैवविधानेन। [गान्धारीं प्रति] देवि, निर्वापय हृदयानलमश्रुप्रवाहेण। को हि दैवं लङ्घितुं प्रभवति?

गान्धारी—वृथैव नरनाथ, विधिरत्र निन्द्यते। आत्मकृतं कर्म्मफलं को नु पुनः खण्डयेत्?

धृतराष्ट्रः—हा कर्म्मफलम्! अवश्यमेव भोक्तव्यमात्मनः कर्म्मणः फलम्। तेन धिङ्माम्। अविमृष्यकारिता हि मम भाग्यहीनतामानयति। किन्तु गान्धारि, कथं विडम्बयति त्वां तवापि भाग्यम्?

गान्धारी—हा नारीभाग्यम्! नयनाभ्यां प्रवहति मे अश्रुनिर्झरिणी, स्फुटति वक्षःस्थलम्। तथापि न प्रशाम्यति हृदयज्वाला।

धृतराष्ट्रः—अहो दहति माम्, दहति मां तापः। देवि, कथ्यताम्, अस्ति कोऽपि निस्तारोपायः?

गान्धारी—देव, निस्तारोऽस्ति केवलमधुना देहपातेन। तन्महाराज, किमतो राजहर्म्यवासविलासेन?

धृतराष्ट्रः—साधु साधु देवि। सम्यगभिहितं त्वया हितसाधनाय। तद्, गन्तव्यं तपसे वनमिति महामतेर्विदुरस्य हितवचनं स्मरामि।

[प्रविशति युधिष्ठिरः]

युधिष्ठिरः—जयतु कौरवेश्वरः।

धृतराष्ट्रः—आः क एष मम जयघोषमुदीरयति? भो नाहं राज्येश्वरः।

युधिष्ठिरः—तात, कुरुराज्येश्वर, एषोऽहं ज्येष्ठपाण्डवो भवद्दासो भवन्तमभिवादये।

धृतराष्ट्रः—वर्द्धस्व धर्म्मनन्दन। तात पाण्डव, श्रूयताम्।

युधिष्ठिरः—आदिश्यतां चिरदासः।

धृतराष्ट्रः—कथयामि धीमन्। नहि नहि। एषा गान्धारनन्दिनी त्वां कथयिष्यति। (गान्धारीं प्रति) नृपनन्दिनि, कथ्यतामभिलाषः पाण्डवाय।

युधिष्ठिरः—(गान्धारीं प्रति) नमस्तेऽम्ब। (प्रणमति) देवि, कथ्यतां कृपया किं ते अनुशासनं परिजनेषु ?

गान्धारी—वत्स, एष वानप्रस्थं कामयते शोकव्यथितो नरपतिः। अहमपि तदनुगमने समुत्सुका भवामि।

युधिष्ठिरः—देवि, कथमसहायाः पाण्डवाः परित्यज्यन्ते दुःखाय ? एते वयं भवतीनां चिरस्नेहार्थिनः सेवका गुरुपादसेवनाय तिष्ठामः। परिजना वयम्। तद् युष्मच्चरणार्च्चनेषु को हि व्याघातः सञ्जातः ?

गान्धारी—तात, न खलु विच्युतिः काऽपि दृष्टा भवतां गुरुजनविषयेषु। परं, सुखेन तिष्ठामो युष्माभिः परिषेविताः। किन्तु, कालोऽस्माकं परिपूर्णः। तद् धर्म्मार्थं वानप्रस्थसाधनम् अभिलषामः।

धृतराष्ट्रः—वत्स, वार्द्धक्ये आरण्यव्रतमेव कुरूणां साधनीयम्। तत् कुलधर्म्मसाधने अस्माकमानुकूल्यं विधीयताम्।

युधिष्ठिरः—अहो, कुलधर्म्मः। देव, तथापि प्रसीद पुत्रकेषु।

धृतराष्ट्रः—स्वस्ति स्वस्ति।

इति प्रथमाङ्के द्वितीयं दृश्यम्।

---

## तृतीयं दृश्यम्—अन्तःपुरम्

द्रौपदी—मातः, सुसम्पन्नमिदानीं माल्यार्घ्यरचनम्। तत् स्वाच्छन्द्येन विधीयतां पुण्यार्च्चनं सर्व्वेषां कल्याणाय।

कुन्ती—साधु द्रुपदनन्दिनि। एवं गतासि गृहलक्ष्मीगौरवं नारी-धर्म्म-पालनेन।

द्रौपदी—देवि, धन्यास्मि तव स्नेहाशीर्लाभेन। देवा मे प्रसीदन्तु यथा कुलधर्म्मं पालयामि।

[ प्रविशति गान्धारी ]

प्रविश्य गान्धारी—( कुन्तीं प्रति ) भगिनि, मोदस्व सुचिरं सौभाग्यसम्पदा वत्सायाः पुण्यशीलेन। ( द्रौपदीं निर्दिशति )

कुन्ती—आगच्छ महादेवि। एषाऽस्मत् कुलवधूरिन्द्राणीकल्पा मनोज्ञचरिता-शेषगुणशालिनी सर्व्वथास्माकं सौख्यं वर्द्धयति। ( द्रौपदीं प्रति ) वत्से, वन्दस्व महादेवीम्।

[ द्रौपदी उभयोः पादवन्दनां करोति ]

गान्धारी—( द्रौपदीं प्रति ) जाते, मोदस्व सुखसम्पदा। वर्द्धस्व वत्सैः सम्भाविता पुण्यशीलेन।

कुन्ती—तदहमपि देवि, वत्सानां कृते भवत्या आशिषं प्रार्थये।

गान्धारी—त्वमेव जानासि प्रिये, आ बाल्यात् पाण्डवा मे चिरस्नेहभाजन-मानन्दस्थानञ्च प्राणानाम्। तत् सुचिरं कल्याणं कामये वत्सानाम्।

कुन्ती—धन्यास्मि। तद् देवि, आगम्यतामस्माभिः सार्द्धं भद्रकालीमन्दिरं मङ्गलार्च्चनाय। ( द्रौपदीं प्रति ) वत्से, अनुसर आवाम्।

गान्धारी—तथास्तु। ( सर्व्वा मन्दिरमुपतिष्ठन्ते। कुन्ती देवीमर्च्चयति )

कुन्ती—( कृताञ्जलिः पुष्पाञ्जलिं निवेद्य प्रार्थयते )

ॐ भद्रकालि महामाये सर्व्वमङ्गलदायिनि।

कुरुकुलेश्वरि देवि, नमस्ते रक्ष नः सुतान्॥ ( प्रणमति )

[ द्रौपदी गान्धारी च नमतः ]

कुन्ती—( द्रौपदीं प्रति ) वत्से, सुसम्पन्नं भगवत्या अर्च्चनम्। तदधुनाहं कुललक्ष्मीप्रतिमायां त्वयि नारीधर्म्मोचितं गार्हस्थ्यभारं समर्प्य वानप्रस्थ-साधनार्थमुद्युक्ता भवामि।

द्रौपदी—अम्ब, कथमशरणांस्तनयान् परिहरसि ? को नु मां त्वया विरहितां स्नेहमाङ्गल्येन परिपालयिष्यति ?

कुन्ती—जाते, मा दुःखं गच्छ। गतासि चिरं गृहलक्ष्मीगौरवं स्वकीय-स्नेहमधुर-पुण्यशीलेन। तेन निःशङ्कं देदीप्यस्व वत्सैर्धर्म्मपालनेन।

द्रौपदी—( गान्धारीं प्रति ) महादेवि, मूर्त्तमाङ्गल्यव्रताऽत्रभवती निवारयतु पाण्डवजननीमारण्यव्रतसङ्कल्पादस्माकं कल्याणाय।

गान्धारी—स्वस्ति, कल्याणि ! एषाहं कथयामि भगिनीम्। ( कुन्तीं प्रति ) भगिनि, विरम वानप्रस्थसाधनात्। अत्रैवावस्थाय रक्ष तनयानभय-माङ्गल्यदानेन।

कुन्ती—देवि, ममापि पूर्णतामेति कालः। तत् तपोवने भवत्याः पुण्य-सङ्गेन श्रेयःसाधनं मम ईप्सितम्। ( द्रौपदीं प्रति ) मास्तु दुःखं भद्रे ! वार्द्धक्ये आरण्य-धर्मसाधनमेव कुरूणां कुलव्रतम्। तत्, कुल-धर्म्मपालनेऽस्माकं सहाया भव। नूनं तपोवनेऽपि युष्माकं कल्याण-साधनमेव विधातव्यं मया स्वधर्म्मपालनेन।

द्रौपदी—मातर्वन्दे युष्मच्चरणयुगलम्। ( वन्दते ) पालयामि ते स्नेहानु-शासनम्। किन्तु भवत्या विच्छेदचिन्ता मां व्याकुलयति !

कुन्ती—( पृष्ठे करं सञ्चाल्य ) अलं दुःखेन भद्रे ! निःशङ्का भव। देवा वो रक्षिष्यन्ति। ( सस्नेहमाद्रियते )

गान्धारी—जयति देवी। ( द्रौपदीं प्रति ) वर्द्धस्व कल्याणि धर्म्मपालनेन।

द्रौपदी—अम्ब, अम्ब !

कुन्ती—( द्रौपदीं प्रति ) शिवमस्तु। सुखिनी भव। एहि, प्रणमामः कुरुकुलेश्वरीं देवीं भद्रकालीं विघ्ननाशाय।

[ सर्व्वा युक्तकराः प्रणमन्ति ]

ॐ सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥

( पटीक्षेपः )

इति प्रथमोऽङ्कः

---

## द्वितीयोऽङ्कः—प्रथमं दृश्यम्

[ द्वारकापुरी—श्रीकृष्णस्य प्रासादः—रत्नसिंहासनोपविष्टः श्रीकृष्णः करतले न्यस्तकपोलो विमनायमानस्तिष्ठति । ]

श्रीकृष्णः—( स्वगतम् ) सुरम्यहर्म्यमालिनी कनकरत्नमयी द्वारका ! साम्प्रतमियं श्रीहीना आभाति । एषा निखिलसुषमानिमण्डितानन्तगुणमहिम्ना अमरावतीव शोभते । सा हि अचिरेणैव विलयं गमिष्यति । ( उत्थाय परिक्रमन् ) सृष्टिविलयौ मम विधानम् । तद् विश्रान्तोऽहं मर्त्यलीलां परिहरिष्यामि । ( पुनर्निवृत्य सिंहासने उपविशति ) ।

[ प्रविशति रुक्मिणीसहिता सत्यभामा ]

प्रविश्य रुक्मिणी—विजयतां द्वारकेशः ।

,, सत्यभामा—जयतु द्वारकानाथः ।

उत्थाय श्रीकृष्णः ( उभयं प्रति )—स्वागतं प्रियाणाम् । देव्यः, भवतीनामागमनमहं प्रतिपालयामि । तद् अलंक्रियतामासनद्वयमानन्देन ।

[ समादरं प्रदर्शयति—उभे चोपविशतः ]

रुक्मिणी—जयतु यदुनाथः । इत्थं विजयते खलु महनीयचरितस्य गौरवम् ।

सत्यभामा—तद्धि राज्येश्वरस्य प्रसादमूलम् ।

श्रीकृष्णः (सहर्षम्)—विजयन्तां महादेव्यः। (उभयं प्रति) देवि रुक्मिणि, प्रिये सत्यभामे, साक्षात् श्रियः खलु भवत्यः। तत् मूर्तिमतीः मङ्गलविग्रहाः युष्मान् संवर्धयामि।

सत्यभामा—अहो भाग्यम्।

रुक्मिणी—विजयते खलु राजराजेन्द्राणां माहात्म्यम्। वयं तु महतां कृपाधन्याः।

श्रीकृष्णः—साधु साधु।

सत्यभामा—(सकौतुकम्) तद् वन्दे यादवेश्वरस्य पादपद्मम् (वन्दते)।

रुक्मिणी—अहमपि नो हृदयेश्वरं प्रणमामि। (सहर्षं नमति)।

श्रीकृष्णः—(सानन्दम्) उत्तमम्, उत्तमम्। यातु—प्रियतमे सत्यभामे, महादेवि प्रिये रुक्मिणि,—अधुना वः कथयामि।

रुक्मिणी सत्यभामे—अनुगृह्यतां निदेशेन।

श्रीकृष्णः—देव्यः, अस्ति किञ्चिद् गूढवक्तव्यम्। तत् सुशान्तमनसा श्रोतव्यम्।

सत्यभामा—कथयतु नाथः।

रुक्मिणी—वयं सश्रद्धमाकर्णयिष्यामः। तद् अपनयतु प्रिय, अस्मत्कौतूहलं हित-वचनेन।

श्रीकृष्णः—महादेव्यः, साम्प्रतमहं प्रभासतीर्थं गमिष्यामि।

रुक्मिणी-सत्यभामे—(सहर्षम्) अहो भाग्यम्! वयं पुण्यसञ्चयं करिष्यामः।

श्रीकृष्णः—(सविषादम्) देव्यः, न तत्रेदानीं भवतीनां गमनेन प्रयोजनम्। प्रयोजनवशादहं गच्छामि। यूयमत्रावस्थाय परिजनानां प्रजानाञ्च सौख्यविधानं कुरुत।

सत्यभामा—कथं तत् सम्भवति? सुधाकरविहीने नभसि कः खलु किरणं विकिरिष्यति?

रुक्मिणी—(सविषादम्) न जाने, को हि विपर्ययः समुपतिष्ठते इति। तद् यादव, अपनयास्माकं कौतूहलं संशयं च हितवचनेन।

